**आगतः शिव वक्राच्च गतश्चगिरिजामुखे ।**
**तेन आगम तंत्राणि कथितानि वरानने ।।१३०।।**

हे श्रेष्ठ मुखवाली! तन्त्र, शिवमुख से आकर गिरिजा (पार्वती) के मुख (मस्तिष्क) में प्रवेश किये हैं। इसीलिये तन्त्र आगम भी कहे जाते हैं।।१३०।।

## आचारवर्णनम्

**यानि कानि च शास्त्राणि कथितान्यागमस्य च ।**
**तानि तानि प्रकाश्यन्ते कौलाचाराणि सुन्दरी ।।१३१।।**

हे सुन्दरि! आगम सम्बन्धी जो-जो शास्त्र कहे गये हैं, वे सभी कौलाचार कहे जाते हैं।।१३१।।

**आचारः कथितो यस्तु मया च कृतवान् भुवि ।**
**तस्याचारस्य नाम्ना च कुलाचारः प्रकीर्त्तिताः ।।१३२।।**

मेरे द्वारा जो आचार पृथिवी पर कहा गया है और किया गया उसी आचार को कुलाचार नाम से कहा जाता है।।१३२।।

**आचारो द्विविधो देवि वाम दक्षिण भेदतः ।**
**पंचमुद्रादि संयुक्तो वामाचारः प्रकीर्त्तितः ।।१३३।।**

हे देवि! यह आचार (कुलाचार) भी वाम और दक्षिण के भेद से दो प्रकार का होता है। मुद्रादि पंचमकारों से संयुक्त होने पर यह वामाचार कहा जाता है।।१३३।।

**पंचमुद्रादिरहितो दक्षिणाचारसंज्ञकः ।**
**नाना तन्त्राणि देवेशि यामलानि पृथक् पृथक् ।।१३४।।**

पंचमुद्रादि रहित होने पर यह आचार दक्षिणाचार संज्ञक होता है।।१३४।।

**डामराणि च सर्वाणि तंत्राणां हृदयानि च ।**
**समासतः प्रवक्ष्यामि श्रृणु देवि वदाम्यहम् ।।१३५।।**

हे देवेशि! अनेक तन्त्र और अलग-अलग यामल तथा डामर होते हैं। हे देवि! मैं संक्षेप में सभी तन्त्रों के हृदयों (रहस्यों) को कहूँगा। अब मैं तुमसे बोलता हूँ, तुम उन्हें सुनो।।१३५।।

**चतुषष्ठीनि तन्त्राणि यामलान्यष्टसुन्दरी ।**
**डामराणि त्रीणिस्युः कथयामि शुभानने ।।१३६।।**

हे सुन्दरि! हे शुभ मुखवाली! तन्त्र चौंसठ, यामल आठ, डामर तीन होते हैं। मैं उन्हें तुमसे कहता हूँ॥१३६॥

**तन्त्राणि बहुधा देवि मयापूर्वं प्रकाशितम् ।**
**यामलान्यत्र वक्ष्यामि डामराणि तथा पुनः ।।१३७।।**

हे देवि! मेरे द्वारा पहले बहुत से तन्त्र प्रकाशित किये गये हैं। कहे गये हैं। अब मैं अन्यत्र यामलों को तथा डामरों को कहूँगा॥१३७॥

**विष्णुब्रह्मशिवानां च यामलानि पृथक् पृथक् ।**
**शक्तेर्गणपतेश्चैव कार्त्तिकेयस्य पृथक् पृथक् ।**
**सूर्यश्चन्द्रमसोश्चैव कथितानि वरानने ।।१३८।।**

हे श्रेष्ठ मुख वाली! विष्णु, ब्रह्मा, शिव, शक्ति, गणपति, कार्त्तिकेय, सूर्य और चन्द्रमा इन आठ देवताओं के अलग-अलग आठ यामलग्रन्थ कहे गये हैं॥१३८॥

**उड्डीशडामरं नाम भूतडामरकं तथा ।**
**शक्तिडामरकं नाम डामराणि च पार्वती ।।१३९।।**

हे पार्वती! उड्डीशडामर, भूतडामर तथा शक्तिडामर नाम वाले तीन डामरग्रन्थ कहे गये हैं॥१३९॥

**कथंचाद्य प्रवक्ष्यामि तन्त्राणीतः वरानने ।**
**चतुषष्टितन्त्राणि विख्यातं वामकेश्वरे ।।१४०।।**

इनके अतिरिक्त चौंसठ तन्त्र वाम तन्त्र में पहले से ही प्रसिद्ध हैं। इसीलिये आज मैं तन्त्रों को कैसे कहूँगा॥१४०॥

**तस्मिन्नोक्तानि तन्त्रेषु कुलाचार गुरुं श्रृणु ।।१४१।।**

उन तन्त्रों में कहे गये कुलाचार के गुरु लक्षण को सुनो॥१४१॥

## गुरुलक्षणम्

**आगमाचार निपुणः सर्वशास्त्रभृतांवरः ।**
**सुवेषधारी दक्षश्च सत्यवक्ता प्रियं वचः ।**
**एवं लक्षण संयुक्तश्चागमस्य गुरुमतः ।।१४२।।**

कुलाचारमार्ग का गुरु, आगमशास्त्रों में वर्णित आचारों में निपुण सभी शास्त्रधारियों (शास्त्रज्ञों) में श्रेष्ठ, सुन्दरवेश धारण करने वाला, दक्ष, सत्यवक्ता और प्रियवादी होता है। आगमशास्त्र का गुरु इन लक्षणों से युक्त बताया गया है॥१४२॥

## शिष्यलक्षणम्

**शिष्योऽपि गुणैर्युक्तो गुरुभक्तिरतः सदा ।**
**धर्मकर्मादि युक्तश्च गुरुमन्त्रपरायणः ।।१४३।।**
**सत्यबुद्धि गुरौ मन्त्रे देवपूजन तत्परः ।**
**गुरुणोदिष्ट मार्गेषु कृतबुद्धिरुदारधिः ।**
**एवं लक्षणसंयुक्ताः शिष्यश्चापि परीक्षकः ।।१४४।।**

शिष्य भी गुणों से युक्त, गुरुभक्ति में सदैव लगा हुआ, धर्म-कर्म से युक्त, गुरु द्वारा मन्त्र में परायण, गुरु और मन्त्र में सत्यबुद्धि रखने वाला, देवपूजन में तत्पर, गुरु के द्वारा निर्दिष्टमार्ग में निष्ठावान्, उदारबुद्धि इस प्रकार के लक्षणों से युक्त होना चाहिये॥१४४॥

**मायानिन्दादिरहितश्चास्यादि विवर्जितः ।**
**समयाचार सम्पन्नो धनाढ्यश्च क्रियापरः ।।१४५।।**

माया और निन्दादि दोषों, आलस्य से रहित और समयाचार से सम्पन्न, धनाढ्य, व्यवहारिक क्रियाओं में तत्पर, परीक्षक होना चाहिये॥१४५॥

## पूजाद्रव्यकथनम्

### श्री सदाशिव उवाच

**पूजा द्रव्यं प्रवक्ष्यामि पूजकाभीष्ट सिद्धये ।**
**तज्ज्ञात्वा मन्त्रवित्सम्यक् फलमाप्नोति पूजने ।।१४६।।**

**श्री सदाशिव बोले–** अब मैं पूजकों (साधकों) को अभीष्ट फल प्रदान करने वाले पूजा के द्रव्यों के विषय में कहूँगा। जिन्हें जान कर मन्त्रवेत्ता साधक पूजन में सम्यक् फल प्राप्त करता है॥१४६॥

**मद्यमांस तथा मत्स्यं मुद्रा मैथुनमेव च ।**
**मकारा पंचसुभगे सांगकर्म सुहेतवे ।।१४७।।**

हे सुभगे! कर्म की अंगों के सहित पूर्णता हेतु मद्य, मांस, मत्स्य, मुद्रा, मैथुन ये पाँच मकारात्मक द्रव्य कहे गये हैं॥१४७॥

**या सुरा सर्वतन्त्रेषु कथिताभुवि दुर्लभा ।**
**तथा नाम भवेद्देवि तीर्थं यज्ज्ञान मुक्तिदम् ।।१४८।।**

हे देवि! सभी तन्त्रों में जो सुरा कही गई है वह पृथिवी पर दुर्लभ है। उस प्रकार सुरा का नाम तीर्थ होता है। जो ज्ञान और मुक्ति दोनों ही देने वाली है॥१४८॥







**पशूनां भक्ष्य योग्यानां मांसं देवि विनिर्मितम् ।**
**देवि मन्त्रां च विधिवत् तस्योक्ता शुद्धिसत्तमा ।।१४९।।**

हे देवि! खाने योग्य पशुओं का मांस भक्ष्य बनाया गया है। देवि! मन्त्र साधना में इसे विधिवत् शुद्धि कहा गया है।।१४९।।

**मांसभक्षणे कथिता ये मत्स्याश्चवरानने ।**
**ते रहस्ये मया प्रोक्ता मीना सिद्धिश्चदायकाः ।।१५०।।**

हे श्रेष्ठ मुखवाली! मांसभक्षण के प्रसङ्ग में जिन मत्स्यों का उल्लेख हुआ है वे ही मेरे द्वारा रहस्यग्रन्थों में सिद्धि देने वाले मीन कहे गये हैं।।१५०।।

**गुडादिमध्ये निःक्षिप्य तत्वज्ञान विवर्धिनी ।**
**मुद्रा तां विधिनाप्राहुश्चणकादीश्च भर्जितान् ।।१५१।।**
**या रोटिका पोलिका च भक्षेषु कथिता शुभाः ।**
**तस्याः नाम भवेद्देवि मुद्रा मुक्ति प्रदायिनी ।।१५२।।**

हे देवि! गुड़ आदि मिलाकर भुने हुए चने आदि के चर्वण आदि को मुद्रा कहा जाता है, जो तत्वज्ञान देने वाला है। भोज्यपदार्थों में जो रोटी, चावल, (पोलिका) कही गई है वह मुक्ति प्रदान करने वाली मुद्रा होती है।।१५१-१५२।।

**भगलिंगस्य योगेन मैथुनं यद्भवेद् प्रिये ।**
**तस्य नाम भवेद्देवि पञ्चमं परिकीर्त्तितम् ।।१५३।।**

हे प्रिये! हे देवि! भग-लिंग के संयोग से जो मैथुनकर्म होता है उसी का नाम शास्त्र में पंचम कहा गया है।।१५३।।

**प्रथमं तु भवेन्मद्ये मांसे चापि द्वितीयकम् ।**
**मत्स्येस्वपि तृतीयं स्यान्नामे मुद्रा चतुर्थकम् ।।१५४।।**
**पंचमे पंचमे विद्यात् पंचैते नामतः स्मृताः ।**
**पंचानां पंचनामानि मकाराणि वरानने ।।१५५।।**

हे श्रेष्ठ मुखवाली! प्रथम तत्व मद्य में, द्वितीय मांस में, तृतीय मत्स्य में, चतुर्थ मुद्रा में, पंचम (मैथुन) में जानें। ये पाँचतत्वों के पांच नाम मकार से प्रारम्भ होने के कारण ये पंचमकार नाम से स्मरण किये गये हैं।।१५४-१५५।।

**प्रथमस्य द्वितीयस्य तृतीयचतुर्थयोः ।**
**पंचमस्य तथादेवि मकाराः पंचदुर्लभाः ।।१५६।।**

हे देवि! प्रथम, द्वितीय, तृतीय, चतुर्थ और पंचम के पंचमकार दुर्लभ हैं॥१५६॥

**पंचमं देवि सर्वेषु ममप्राणे भवेत्प्रियो ।**
**पंचमेन विना देवि चंडी मंत्रं वृथा जपेत् ।।१५७।।**

हे देवि! इन सब में पंचम मुझे प्राणप्रिय होता है। हे देवि! पंचम के बिना चंडी जप व्यर्थ हो जाता है॥१५७॥

**यदि सर्वमकारेषु भ्रान्तिं च कुरुते प्रिये ।**
**तस्यसिद्धिः कथं देवि शक्ति मंत्र जपेत्कथम् ।।१५८।।**

हे प्रिये! यदि कोई इन सभी मकारों में भ्रान्ति रखता है तो उसे सिद्धि कैसे होगी? वह शक्तिमन्त्र कैसे जपेगा? अर्थात् उसका शक्तिमंत्र जप सिद्धिरहित और व्यर्थ होता है॥१५८॥

**पंचमं विना देवि भुक्ति मुक्ति कथं भवेत् ।**
**पंचमं विना देवि कथं च फलदा भवेत् ।।१५९।।**

हे देवि! पंचम के बिना भोग और मोक्ष की प्राप्ति कैसे होगी? पंचम के बिना साधना कैसे फलदायिनी हो सकती है? अर्थात् कथमपि नहीं हो सकती॥१५९॥

**पंचमेन विना देवि यदानंदो भवेद् ध्रुवम् ।**
**तन्नाममोक्षो विदुषामबुधानां च पातकम् ।।१६०।।**

हे देवि! पंचम के बिना जो आनन्द होता है निश्चय ही वह विद्वानों के लिंए मोक्ष न होकर वह मूर्खों का पातककर्म ही होता है॥१६०॥

**आनन्दं परमं ब्रह्म मकारानन्द सूचकम् ।**
**तया विशेषतो देवि पंचमं परिकीर्त्तितम् ।।१६१।।**

हे देवि! उपर्युक्त मकारों का आनन्द ही परमब्रह्म के आनन्द का सूचक है। उनमें भी विशेष रूप से पंचम तत्त्व कहा गया है॥१६१॥

**भगस्य स्मरणोपुण्यं भगस्य दर्शने तथा ।**
**भगस्य पूजने पुण्यं भगस्य पंचमे तथा ।।१६२।।**

भग का स्मरण और उसका दर्शन पुण्य है। भग का पूजन एवं भग का पंचमकर्म (मैथुन) पुण्य है॥१६२॥

**भगस्य पंचमे देवि यन्सुखमप्यजायते ।**
**न तत्सुखं जपे देवि दानैस्तपसा तथा ।।१६३।।**

हे देवि! भग के पंचम में जो सुख होता है वह सुख न जप में होता है, न दान में और न तपस्या में ही होता है॥१६३॥

**पंचमस्य कृते देवि यत्पुण्यं भुवि जायते ।**
**न तत् पुण्यं समं देवि कोटितीर्थादि दर्शनम् ।।१६४।।**

हे देवि! पंचम के करने से पृथिवी पर जो पुण्य होता है। उस पुण्य के समान पुण्य, करोड़ों तीर्थादि के दर्शन का भी नहीं होता॥१६४॥

**जप होमस्तथा दानं भिक्षायागादि कल्पना ।**
**कृतं पंचमं भक्तस्य कलानार्हंति षोडशी ।।१६५।।**

जप, होम, दान, दीक्षा, याग आदि की कल्पनाएँ (विधान), जिस भक्त ने पंचमकर्म कर लिये उसके फल की सोलहवीं कला की भी समानता नहीं कर सकतीं॥१६५॥

**त्रयोदशर्षाद्वा हि पंचविंशति वार्षिकी ।**
**अप्रसूना विशेषेण पंचमार्हा भवेत्प्रिये ।।१६६।।**

हे प्रिये! तेरह वर्ष से पच्चीस वर्ष तक की विशेषकर जो अप्रसूना हो अर्थात् जिसका मासिक धर्म न हुआ हो ऐसी शक्ति, विशेष रूप से पंचम के योग्य होती है॥१६६॥

**अप्रसूता विशेषेण प्रसूतावा प्रसूतिका ।**
**अवश्यं पंचमं कुर्यात्शक्ति मात्रं महेश्वरि ।।१६७।।**

विशेष कर बिना बच्चे वाली होती है, अन्यथा बच्चों को पैदा की हुई या करने वाली भी हो सकती है। हे महेश्वरि! शक्ति भाव से ही पंचमकर्म अवश्य करना चाहिये॥१६७॥

**पंचमे च कृते देवि यत्कुर्यात् पूजनादिकम् ।**
**तदक्षय लभते पुण्यं नात्रकार्या विचारणा ।।१६८।।**

हे देवि! पंचम को करके जो पूजन आदि करता है, वह अक्षय पुण्य प्राप्त करता है। इसमें विचार (सन्देह) नहीं करना चाहिये॥१६८॥

**गुरुं च तोषयेत्तत्र तत्पत्नीं वा सुतादि वा ।**
**नानाभरणवस्त्राद्यैस्तथा द्रव्येण सुन्दरी ।।१६९।।**

हे सुन्दरि! अनेक प्रकार के वस्त्रादि आभूषणों एवं द्रव्यों से गुरु, तत्पश्चात् गुरुपत्नी या गुरु के पुत्रादि को सन्तुष्ट करे॥१६९॥

**पंचमार्था यथा शक्तिस्तस्यां कुर्याच्च पंचमम् ।**
**तस्यास्तोत्रं प्रकुर्याच्च विशेषेण शृणु प्रिये ।।१७०।।**

हे प्रिये! पंचम के निमित्त यथाशक्ति उनका पूजन कर पंचमकर्म करे और उसकी स्तुति करे। तत्सम्बन्धी स्तोत्र को विशेष रूप से कहूँगा। तुम उसे सुनो॥१७०॥

**द्रव्येण भूषणैश्चैव वसनालिंगनादिभिः ।**
**स्नानार्थं देवतायाश्च रहस्यं परमं शृणु ।।१७१।।**

द्रव्य, आभूषण, वस्त्र तथा आलिंगन आदि द्वारा उसकी स्तुति (पूजा) की जानी चाहिये। अब देवता के स्नान के निमित्त परम रहस्य मैं तुमसे कहूँगा। तुम उसे सुनो॥१७१॥

**येन स्नान कृते देवि देवता सुप्रसीदति ।**
**रात्रौ पंचम काजेषु कृत्वा पंचममुत्तमम् ।।१७२।।**

हे देवि! जिससे स्नान करने से देवता सुन्दर ढंग से प्रसन्न होते हैं। रात्रि में पंचमकाज करने से उत्तम पंचम कार्य होता है॥१७२॥

**भगमध्येषु यद्द्रव्यं गृहणाद्य प्रयत्नतः ।**
**तस्यङ्कुरोद्भवं तोयं विजयं भुक्तिमुक्तिदम् ।।१७३।।**

भग के मध्य में जो द्रव्य होता है उसे यत्नपूर्वक ग्रहण करना चाहिये। उसके अंकुर से उत्पन्न जल, साधक के लिये विजय, भोग और मोक्ष दोनों ही देने वाला होता है॥१७३॥

**लभते भाग्ययोगेन देवतानां च दुर्लभम् ।**
**तस्मिन् किञ्चिज्जलं छिप्त्वा ताम्रपात्रे च धारयेत् ।।१७४।।**

वह जल भाग्य से ही प्राप्त होता है। वह देवताओं को भी दुर्लभ है। उसमें थोड़ा अन्य जल मिला कर उसे ताम्रपात्र में रखे॥१७४॥

**तद्द्रव्यस्नानमात्रेण देवता सुप्रसीदिति ।**
**स्त्रियो रजस्य प्रथमं यस्मिन् वयसि जायते ।।१७५।।**
**गृहणीयाच्च सुभगे ब्रह्मादीनां च दुर्लभम् ।**
**स्वयंभू कुसुमं नाम देवतानां च प्राप्तये ।।१७६।।**

उस द्रव्य से स्नानमात्र से ही देवता प्रसन्न हो जाते हैं। स्त्रियों का प्रथम रजोदर्शन जिस अवस्था में होता है। हे सुभगे! ब्रह्मा आदि को भी

दुर्लभ उस प्रथमरज को ग्रहण करना चाहिये। क्योंकि यही स्वयंभूकुसुम नाम से देवताओं की प्राप्ति का कारण है॥१७५-१७६॥

**यदि भाग्यवशाद्देवि लभते सुकुमात्विदम् ।**
**ततः स्वदेवतानां च प्रकुर्यात्स्नानमुत्तमम् ।।१७७।।**

हे देवि! भाग्यवश यदि यह स्वयंभूकुसुम प्राप्त हो ज़ाय तो उससे अपने इष्ट देवता को उत्तम स्नान कराना चाहिये॥१७७॥

**वांछितं लभते मन्त्री सत्यं सत्यं वरानने ।।१७८।।**

ऐसा करने से मन्त्री (मन्त्र साधक), अपना वांछितफल प्राप्त करता है। हे श्रेष्ठमुखवाली! यह सत्य से भी सत्य है॥१७८॥

**स्वगुरुदत्तमन्त्रेण षडंगन्यासं समाचरेत् ।**
**शक्तिदेहे स्वदेहेवा पंचमं कारयेत्ततः ।**
**ततो जपादिकं कुर्याच्चाक्षयं लभते फलम् ।।१७९।।**

उपर्युक्त विधि से स्नान के पश्चात् साधक अपने गुरु द्वारा दिये गये मन्त्र से शक्ति के शरीर में या अपने शरीर में अंगन्यास करे तत्पश्चात् पंचमकर्म का सम्पादन करे। तदनन्तर जप आदि करने से अक्षयफल प्राप्त होता है॥१७९॥

**इदं रहस्यं कथितं देवतास्नानहेतवे ।**
**षडाम्नायेषु तन्त्रेषु रहस्यमिदमीरितम् ।।१८०।।**

यह देवता के स्नानहेतु रहस्य बताया गया है। षडाम्नायों से सम्बन्धित तन्त्रों में ही यह रहस्य विशेष रूप से कहा गया है॥१८०॥

**उत्तराम्नायेषु मन्त्रेषु प्रकुर्याच्च विशेषतः ।**
**जीवतिभर्त्तारनारीं पंचम कारयेत् प्रिये ।।१८१।।**

हे प्रिये! उत्तराम्नाय के मन्त्रों से इस विधि को विशेष रूप से करना चाहिये। इसमें पंचमकार्य, जिसका पति जीवित हो उसी सधवा स्त्री से करना चाहिये॥१८१॥

**तस्या भगस्य यद्द्रव्यं तच्चगोलोद्भवं मतम् ।**
**कुण्ड गोलोद्भवेद् द्रव्ये अभावे शृणु सुन्दरि ।।१८२।।**

हे सुन्दरि! उस अवस्था में भग से प्राप्त द्रव्य गोलोद्भव कहा गया है। ऐसे कुण्ड और गोल से उत्पन्न पूजाद्रव्य के अभाव में क्या करना चाहिये, उसे सुनो॥१८२॥

**कथं स्नानं प्रकुर्याच्च देवतातोषहेतवे ।**
**यस्य कस्यतरोः पुष्पं गृहीत्वासु प्रयत्नतः ।।१८३।।**

तब देवता की सन्तुष्टि हेतु कैसे स्नान करना चाहिये उसे सुनो। शीघ्र ही जिस किसी भी वृक्ष का पुष्प प्रयत्नपूर्वक ग्रहण करना चाहिये।।१८३।।

**तेषां मध्ये द्रव्यग्राह्यं हस्ताभ्यां मनस्यातदा ।**
**उभयो पंचमं तत्र कुर्वीत विधिवन्नरः ।।१८४।।**

उनमें से द्रव्य को हाथों एवं मन से स्वीकार कर दोनों से साधक विधिवत् पंचमकर्म करे।।१८४।।

**रक्तचन्दन धृष्टे च जले चैव क्षिपेत्तदा ।**
**तज्जलेन प्रकुर्वीत देवतास्नानमुत्तमम् ।।१८५।।**

घिसे हुए लाल चन्दन और जल में उन्हें डाल कर उस जल से देवता का उत्तम स्नान सम्पन्न करे।।१८५।।

**वांछितफलमाप्नोति सत्यं सत्यं वरानने ।**
**वल्ली पुष्पाणि सर्वाणि तरोर्पुष्पाणि यानिवा ।।१८६।।**
**ओषधीषु च सर्वासु यानि पुष्पाणि कानि चित् ।**
**तानि सर्वाणि सुभगे देवताभ्यो निवेदयेत् ।।१८७।।**

उपर्युक्त स्नान के सम्पादन से साधक वांछित फल प्राप्त कर लेता है। हे श्रेष्ठ मुखवाली! यह सत्य है। यही सत्य है।

हे सुभगे! सभी वल्ली, वृक्ष और औषधियों के पुष्प जो कुछ भी प्राप्त हो सकें उन्हें ही सभी देवताओं को निवेदित करना चाहिये।।१८६-१८७।।

**सर्वामन्येस्वधिष्ठानां तुलसी वर्जितानि च ।**
**अपराजितायाः पुष्पं च द्वयपुष्पं च यत्भवेत् ।।१८८।।**
**करवीरस्य यत्पुष्पं यत्पुष्पं बन्धुजीवकम् ।**
**कमलस्य च यत्पुष्पं यत्पुष्पं चम्पकस्य च ।।१८९।।**
**विशेषतश्च योग्यानि सर्वपुण्येषु सुन्दरी ।**
**पत्राणां बिल्वपत्राणि पूजार्थे च शुभानने ।।१९०।।**

हे सुन्दरि! हे शुभमुखवाली! सभी आम्नायों से सम्बन्धित पूजन में तुलसी को छोड़ कर अपराजिता, द्वयपुष्प, करवीर (कनैल), बन्धुजीवक

(गुड़हल), कमल और चम्पक के जो फूल कहे गये हैं वे सभी पुष्पों में विशेषकर योग्य कहे गये हैं। पूज़ा हेतु पत्रों में बिल्वपत्र विशेष योग्य कहा गया है॥१८८-१९०॥

## पीठवर्णनम्

**अथेदानीं प्रवक्ष्यामि जपार्थं पीठमुत्तमम् ।**
**कृते पूर्णगिरि योग्यं त्रेतायामुड्डाण संज्ञकम् ।।१९१।।**
**जालंधरं च द्वापरे तु कामपीठं कलौयुगे ।**
**चतुः पीठानि सुभगे शक्तिदेहेषु यानि च ।।१९२।।**

अब ज़प हेतु उत्तम पीठों के विषय में कहूँगा। सतयुग में पूर्णगिरिपीठ, त्रेता में उड्डानपीठ, द्वापर में जालंधरपीठ, तथा कलियुग में कामपीठ (कामाख्या) उत्तम कहे गये हैं।। हे सुभगे! शक्ति के शरीर में स्थित जो उपर्युक्त चार पीठ हैं॥१९१-१९२॥

**तानि चत्वारि वक्ष्यामि गुह्याद् गुह्यतराणि च ।**
**शक्तेः सर्वः शरीरं यत् पीठं पूर्णगिरि मतम् ।।१९३।।**
**तस्याः शिरस्य सुभगे उड्डाणं कीर्त्तितं मया ।**
**स्तनौ जालधरं ज्ञेयं कामपीठं भगं स्मृतम् ।।१९४।।**

हे सुभगे! उन चारों के विषय में मैं तुमसे कहूँगा जो गोपनीय से भी गोपनीय हैं। शक्ति का जो सम्पूर्ण शरीर है वही पूर्णगिरि कहा गया है। उसका शिर मेरे द्वारा उड्डानपीठ कहा गया है। उसके दोनों स्तन जालंधरपीठ जानने योग्य हैं तथा भग को कामपीठ कहा गया है॥१९३-१९४॥

**सर्वेषु कामपीठं यद्देवानामपि दुर्लभम् ।**
**एषु पीठेषु संस्थित्वा यं यं मन्त्रं जपेत्प्रिये ।**
**तत्तस्य फलमाप्नोति देवताशु प्रसीदति ।।१९५।।**

हे प्रिये! सभी पीठों में वह कामपीठ ही ऐसा है जो देवताओं को दुर्लभ है। इन पीठों में स्थित होकर साधक, जिन-जिन मन्त्रों का जप करता है। इनका फल प्राप्त करता है तथा देवता भी साधक पर शीघ्र प्रसन्न हो जाते हैं॥१९५॥

## बलिदानवर्णनम्

**सर्वेषां बलिदानं च देवतानां शृणु प्रिये ।**
**येन कृत्वाशु लभते यथोक्तं फलमुत्तमम् ।।१९६।।**

हे प्रिये! सभी देवताओं के बलिदान के विषय में सुनो। जिसे करके साधक शीघ्र ही कहे अनुसार फल, प्राप्त कर लेता है॥१९६॥

**नित्यं स्वभोजने काले मूलमन्त्रेण साधकः ।**
**कारयेद्बलिदानं च भोजनात्प्रथमं प्रिये ।।१९७।।**

हे प्रिये! साधक को चाहिये कि वह अपने भोजन के पहले मूलमन्त्र से नित्य बलिदानकर्म सम्पन्न करे॥१९७॥

**ततश्चानंतरं देवि शुचिस्तदगत् वा भवेत् ।।१९८।।**

हे देवि! उसके बाद वह पवित्र हो या देवता के भाव से अभिभूत होवे॥१९८॥

**बलिं समुद्धरेद्यत्नादेकांते स्थापयेत्तदा ।**
**स्थापयित्वा बलिं तत्र विहरेच्च यथासुखम् ।।१९९।।**

तब बलि को प्रयत्नपूर्वक उठा कर ले जाकर एकान्त स्थान में स्थापित करे। इस प्रकार वहाँ बलि को स्थापित कर साधक को यथारुचि विहार करना चाहिये॥१९९॥

**उत्तराम्नायो देवेशि मातंगी या प्रकीर्तिता ।**
**तस्या बलि भोजनान्ते विनैवाचमने कृते ।।२००।।**
**मूलमन्त्रेण सुभगेबलिं दत्वा दिने-दिने ।**
**किचिज्जपादिकं कृत्वा ततः आचमनादिकम् ।।२०१।।**
**पुनश्च रात्रै सर्वेषां बलिं कृत्वा प्रयत्नतः ।**
**यथोक्त विधिना कुयाद्यथोक्त फलमश्नुते ।।२०२।।**

हे देवेशि! उत्तराम्नाय में जो मातंगी देवी कही गई हैं। उनके लिये बलि, भोजन के अन्त में बिना आचमन किये ही देनी चाहिये। हे सुभगे! दिन में ही उपर्युक्त रीति से बलिदान कर ही कुछ जप आदि करने के पश्चात् आचमनादि सम्पन्न करे। पुनः रात्रि में प्रयत्नपूर्वक सबको बलि करके ,यथोक्त विधि से जपादि करे तो साधक कहे अनुसार फल प्राप्त करता है॥२००-२०२॥

**बलिश्च द्विविधो देवि सात्विको राजसस्तथा ।**
**सात्विके बलिमाख्यातो मांसरक्तादि वर्जितः ।**
**राजसो मांस रक्तादि युक्तः सम्प्रोच्चयते प्रिये ।।२०३।।**

हे देवि! यह बलि सात्विक एवं राजस भेद से दो प्रकार की होती है। मांस और रक्त आदि से रहित बलि सात्विक कही गई है। हे प्रिये! राजस बलि ही मांस रक्तादि से युक्त कही जाती है॥२०३॥

**साधकास्त्रिविधा प्रोक्ता सात्विका राजसास्तथा ।**
**तामसाश्च तथा देवि तेषाम् वक्ष्यामि लक्षणम् ॥२०४॥**

हे देवि! साधक, सात्त्विक, राजस और तामस तीन प्रकार के कहे गये हैं। अब मैं उनके लक्षणों को कहूँगा॥२०४॥

**सात्विकाः सात्त्विकैर्युक्ताः लक्षणैश्चापि सुन्दरि ।**
**सात्विकं बलिदानादि नित्यं कुर्यात्प्रयत्नतः ॥२०५॥**

हे सुन्दरि! सात्विकसाधक वे होते हैं जो सात्विकलक्षणों से युक्त होते हैं तथा नित्य प्रयत्नपूर्वक सात्विकबलिदान आदि करते हैं॥२०५॥

**राजसो राजसगुणैर्युक्तो नित्यं शुभानने ।**
**राजसं बलिदानादि सुवेशैः राजसैर्युतः ॥२०६॥**

हे शुभ मुख वाली! नित्य राजस गुणों से युक्त राजसबलिदान आदि करने वाला, सुन्दर, राजस वेश से युक्त साधक, राजससाधक होता है॥२०६॥

**तामसः तामसगुणैर्रोषादि संयुतः प्रिये ।**
**न श्रद्धा बलिदानेषु पूजनादिषु सुन्दरि ॥२०७॥**
**नस्तोत्रपठने देवि नाममात्रेण साधकः ॥२०८॥**

हे सुन्दरी! हे प्रिये! तामससाधक, रोष आदि तामस गुणों से युक्त होता है तथा उसकी बलिदान एवं पूजन आदि कर्मों में श्रद्धा नहीं होती। और न उसकी स्तोत्रपाठ करने में श्रद्धा होती है। हे देवि! वह नाममात्र का साधक होता है॥॥२०७-२०८॥

### मन्त्रवर्णनम्

**अथेदानीं प्रवक्ष्यामि मम मन्त्राणि सुन्दरी ।**
**यान्यत्र मम मन्त्राणि प्रसिद्धानि स्वभावतः ॥२०९॥**

हे सुन्दरी! अब मैं अपने उन मन्त्रों को कहूँगा जो इस जगत् में स्वाभाविक रूप से मेरे प्रसिद्ध मन्त्र हैं॥२०९॥

**अघोराख्यं महामन्त्रं आपदुद्धारणं तथा ।**
**चिंतामणि ततः देवि तथा मृत्युञ्जयं वरम् ।**
**चण्डेश्वरं च सुभगे अर्धनारीनटेश्वरम् ॥२१०॥**

हे देवि! अघोर नामक मन्त्र मेरा महामन्त्र है, आपदुद्धारण, चिन्तामणि, मृत्युञ्जय मेरे श्रेष्ठ मन्त्र हैं। हे सुभगे! इनके अतिरिक्त चण्डेश्वर, अर्धनारीनटेश्वर मन्त्र भी हैं॥२१०॥

**नाना तंत्रेषु देवेशि मम मन्त्राणि यानि च ।**
**ज्ञातव्यानि सदा भद्रे षडाम्नायेषु तानि च ।।२११।।**

हे भद्र आचरण करने वाली! हे देवेशि! षडाम्नायों के अनेक तन्त्रों में मेरे जो मन्त्र दिये गये हैं वे सदा जानने योग्य हैं॥२११॥

**वामाचारेण वा देवि जप्त्वा फलमवाप्नुयात् ।**
**दक्षिणाचार योगेन जप्त्वा फलमवाप्नुयात् ।।२१६।।**

हे देवि! मेरे उन मन्त्रों को वामाचार या दक्षिणाचार दोनों से ही जप कर साधक अभीष्टफल प्राप्त करता है॥२१२॥

**विशेषतश्च सुभगे मम मन्त्राणि यानि च ।**
**पूर्वाम्नायेन विधिना शीघ्रकाल फलप्रदाः ।।२१३।।**

हे सुभगे! मेरे जो मन्त्र हैं वे विशेष कर पूर्वाम्नाय की विधियों से शीघ्रकाल, थोड़े समय में ही साधक को फलप्रदान करने वाले हैं॥२१३॥

**नाना पापहरा देवि मन्त्राः कामदुघा प्रिये ।।२१४।।**

हे देवि! वे मेरे मन्त्र, अनेक पापों को दूर करने वाले, इच्छित फल देने वाले और मुझे अत्यन्त प्रिय हैं॥२१४॥

**यं यं मन्त्रं जपेद्देवि वीरस्तद्गतमानसः ।**
**तं तं मन्त्रभावं समासाद्य फलं तं तं लभेन्नरः ।।२१५।।**

हे देवि! वीर साधक जिन जिन मन्त्रों को तद्गत समाहित मन से जपता है, वह मनुष्य उन-उन भावों को प्राप्त कर उनसे सम्बन्धित अभीष्टफल को प्राप्त करता है॥२१५॥

**तव मन्त्राणि देवेशि मम मन्त्राणि यानि च ।**
**यानि यानि प्रसिद्धानि तानि तानि वतानि च ।।२१६।।**

हे देवेशि! तुम्हारे मन्त्र और मेरे जो मन्त्र हैं। जो जो प्रसिद्ध हैं वे वे यथोक्त फलदायक ही हैं॥२१६॥

**यथा स्वयंभुवा देवि वेदाश्चत्वारः प्रकीर्तिताः ।**
**ज्ञातव्यानादिसंसिद्धाः पारम्पर्योपदेशतः ।।२१७।।**

हे देवि! जैसे स्वयंभुव ब्रह्मा द्वारा कहे गये चारों वेद भली प्रकार सिद्ध हैं, परम्परा से प्राप्त उपदेश द्वारा जानने योग्य और अनादि हैं॥२१७॥

**पारम्पर्यतोपि ज्ञेयाः श्रुता आम्नाय भेदतः ।**
**तथात्वयि मया प्रोक्ताः षडाम्नायश्च सन्निधौ ॥२१८॥**

उसी प्रकार मेरे तुम्हारे मन्त्र भी आम्नाय भेद परम्परा के द्वारा सुन कर जानने योग्य हैं तथा षडाम्नायों में मेरे द्वारा कहे गये और तुम्हारे द्वारा सुने गये हैं॥२१८॥

**स आम्नायः श्रुति ज्ञेयः श्रुति वदतो लभेत् ।**
**अतस्त्वयापि गिरिजे गोपनीयाः स्वयोनिवत् ॥२१९॥**

हे गिरिजे! वे आम्नाय भी वेद ही समझे जाने चाहियें। और उन्हें वेद के ही समान करेजाने (दीक्षाक्रम) से ही जानना चाहिये। इसीलिये तुम्हारे द्वारा भी वे मन्त्र अपनी योनि के समान गुप्त रखने योग्य हैं॥२१९॥

**अथातः सम्प्रवक्ष्यामि रहस्यं परमं श्रृणु ।**
**बहु मन्त्री यदा देवि साधको दैव योगतः ॥२२०॥**
**तत्र कस्य जपं कुर्यात् पूजनादिकमेव च ।**
**सर्वदेव नमस्कारं नित्यं कुर्यात् प्रयत्नतः ।**
**जपादिकं तु तस्यैव यस्य संगमते मनः ॥२२१॥**

अब मैं अत्यन्त रहस्य की बात बताता हूँ। उसे तुम ध्यान से सुनो, दैवयोग से साधक यदि बहुत से मन्त्रों का अभ्यासी हो तो उसे किस का जप या पूजन आदि करना चाहिये। यह मैं कहूँगा। ऐसा साधक नित्य सभी देवताओं को प्रयत्नपूर्वक प्रणाम करे किन्तु जपादिक तो उसी का करे जिसमें मन एकाग्र रूप से लगे॥२२०-२२१॥

**गुरोर्गृहीत मन्त्रं तु जप्त्वा त्यजति साधकः ॥२२२॥**
**दुष्टाचाराद् प्रमादाद्वा आलस्याद्वापि सुन्दरी ।**
**शंकया वा गृहीतस्य कथनं यत्र कुत्राचित् ॥२२३॥**
**हीनवीर्यमवाप्नोति मन्त्रादिकं वरानने ।**
**इत्यादि दोषनाशार्थं विधानं श्रृणु साम्प्रतम् ॥२२४॥**

गुरु द्वारा उपदेश के माध्यम से ग्रहण किये गये मन्त्र को जो साधक एक बार जप करने के पश्चात् दुष्टाचरणवश, उपेक्षा से, आलस्य से, शङ्का से छोड़ देता है या हे सुन्दरी! गुरुदीक्षा द्वारा गृहीत गुरुमन्त्र का उपर्युक्त कारणों से जहाँ कभी भी कथन करता है। हे वरानने! उसके मन्त्रादि हीनवीर्य, प्रभावहीनता को प्राप्त करते हैं। वह मन्त्र के प्रभाव से रहित हो जाता है। हे श्रेष्ठ मुख वाली! अब उपर्युक्त दोषों के नाश के उपाय मुझसे सुनो॥२२२-२२४॥

**मन्त्रसंस्कारवर्णनम्**

**प्रथमं जननं नाम जीवनं तु द्वितीयकम् ।**
**तृतीयं ताडनं देवि चतुर्थंबोधनंमतम् ।।२२५।।**
**पंचमं अभिषेकश्च विमलीकरणं षष्टमम् ।**
**आप्यायनं सप्तमं तु अष्टमं तर्पणं मतम् ।।२२६।।**
**नवमं दीपनं नाम गोपनं दशमं स्मृतम् ।**
**मनूनां मातृकामध्यात् उद्धारो जननं मतम् ।।२२७।।**

**दश मन्त्र संस्कार–**

पहला जनन, दूसरा जीवन, तीसरा ताडन, चौथा बोधन, पाँचवाँ अभिषेक, छठा विमलीकरण, सातवां आप्यायन, आठवाँ तर्पण, नौवाँ दीपन, दसवाँ गोपन कहे गये हैं। इनमें मातृकाओं के मध्य से मन्त्रों का उद्धार करना, जनन नामक संस्कार कहा गया है॥२२५-२२७॥

**मन्त्रवर्णान् जपेन्नित्यं प्रणवान्तरितान् क्रमात् ।**
**एतज्जीवनं नाम ताडनं शृणु चापरम् ।।२२८।।**

प्रणव ॐकार के बीच में मन्त्र के अक्षरों को क्रमशः डाल कर नित्य जप करे तो इस क्रिया को जीवन कहते हैं। अब अगले ताडन संस्कार के विषय में सुनो॥२२८॥

**मनुवर्णान् समाल्लिख्य ताडयेच्चंदनाम्भसा ।**
**प्रत्येकं वायुना मन्त्री ताडनं नामतः स्मृतम् ।।२२९।।**

जब मन्त्र वेत्ता साधक मन्त्र से सम्बन्धित प्रत्येक वर्ण को लिख कर उन्हें चन्दनमिश्रित जल या वायु से ताडित करता है तो यह संस्कार ताडन कहा जाता है॥२२९॥

**मनुलिख्य विधानेन यदा मंत्रार्ण संख्यया ।**
**मंत्रमभिषिचेद् देवी मन्त्राणां च विशुद्धये ।।२३०।।**

हे देवि! विधिपूर्वक मन्त्र को लिख कर जब मन्त्र अक्षरों की संख्या के अनुसार मन्त्र की दोष निवृत्ति हेतु मूल मन्त्र के जपपूर्वक उनका अभिषेक करे॥२३०॥

**संचित्य मनसा मंत्री ज्योति मंत्रेण निर्दहेत् ।**
**मन्त्रे मलत्रयं देवि विमलीकरणं विदम् ।।२३१।।**

हे देवि! मन्त्रसाधक मन्त्र का मानसिक रूप से चिन्तन करता हुआ ज्योतिमन्त्र के जप से उसके तीनों प्रकार के मलों को जलाये तो यह संस्कार विमलीकरण होता है॥२३१॥

**तारं व्योमाग्निमनुयुग्दंडी ज्योतिर्मनुमतः ।**
**कुशोदकेन जप्तेन प्रत्यर्णं प्रोक्षणं मतम् ।।२३२।।**

ॐ कार, व्योम (हँ), अग्नि (रँ) मनुयुग मिल कर ज्योतिमन्त्र कहा गया है। कुशोदक से जप करते हुए प्रत्येक अक्षर का प्रोक्षण, प्रोक्षण कहा गया है॥२३२॥

**तेन मन्त्रेण विधिवद्देवस्याप्यायनं मतम् ।**
**मनुनावारिणा मन्त्रं तर्पणं तर्पणं भवेत् ।।२३३।।**

देवता के उसी मन्त्र से विधिवत् आप्यायन होता है। वारि मन्त्र वँ से मन्त्र का तर्पण करना, तर्पण संस्कार होता है॥२३३॥

**तारोमाया रमा योगं मनोर्दीपन मुच्यते ।**
**जप्यमानस्य मन्त्रस्यगोपनं त्वप्रकाशनम् ।।२३४।।**

मन्त्र से तार (ॐ) माया (ह्रीं) रमा (श्रीं) का योग होना मन्त्र का दीपन कहा जाता है। जपने योग्य, दीक्षा से प्राप्त मन्त्र का प्रकाशन (प्रकटीकरण) न करना ही गोपन है॥२३४॥

**एते च दस संस्काराः सर्व मन्त्रेषु गोपिताः ।**
**एतान्कृत्वा जपेन्मन्त्रं सदोष रहितः प्रिये ।।२३५।।**

हे प्रिये! ये ऊपर कहे गए दस संस्कार सभी मन्त्रों में गोपनीय हैं। इनको करने के पश्चात् अभीष्ट मन्त्र का जप करने से वह मन्त्र, दोषरहित हो जाता है॥२३५॥

**निर्गुणं यत् परं ब्रह्म अकारादि विवर्जितम् ।**
**साकारं यद् भवेद्देवि बहुधा तर्पणादिषु ।।२३६।।**

गुरु द्वारा उपदेश के माध्यम से ग्रहण किये गये मन्त्र को जो साधक एक बार जप करने के पश्चात् दुष्टाचरणवश, उपेक्षा से, आलस्य से, शङ्का से छोड़ देता है या हे सुन्दरी! गुरुदीक्षा द्वारा गृहीत गुरुमन्त्र का उपर्युक्त कारणों से जहाँ कभी भी कथन करता है। हे वरानने! उसके मन्त्रादि हीनवीर्य, प्रभावहीनता को प्राप्त करते हैं। वह मन्त्र के प्रभाव से रहित हो जाता है। हे श्रेष्ठ मुख वाली! अब उपर्युक्त दोषों के नाश के उपाय मुझसे सुनो॥२२२-२२४॥

## मन्त्रसंस्कारवर्णनम्

**प्रथमं जननं नाम जीवनं तु द्वितीयकम् ।**
**तृतीयं ताडनं देवि चतुर्थंबोधनंमतम् ।।२२५।।**
**पंचमं अभिषेकश्च विमलीकरणं षष्टमम् ।**
**आप्यायनं सप्तमं तु अष्टमं तर्पणं मतम् ।।२२६।।**
**नवमं दीपनं नाम गोपनं दशमं स्मृतम् ।**
**मनूनां मातृकामध्यात् उद्धारो जननं मतम् ।।२२७।।**

**दश मन्त्र संस्कार-**

पहला जनन, दूसरा जीवन, तीसरा ताडन, चौथा बोधन, पाँचवाँ अभिषेक, छठा विमलीकरण, सातवां आप्यायन, आठवाँ तर्पण, नौवाँ दीपन, दसवाँ गोपन कहे गये हैं। इनमें मातृकाओं के मध्य से मन्त्रों का उद्धार करना, जनन नामक संस्कार कहा गया है॥२२५-२२७॥

**मन्त्रवर्णान् जपेन्नित्यं प्रणवान्तरितान् क्रमात् ।**
**एतज्जीवनं नाम ताडनं शृणु चापरम् ।।२२८।।**

प्रणव ॐकार के बीच में मन्त्र के अक्षरों को क्रमशः डाल कर नित्य जप करे तो इस क्रिया को जीवन कहते हैं। अब अगले ताडन संस्कार के विषय में सुनो॥२२८॥

**मनुवर्णान् समाल्लिख्य ताडयेच्चंदनाम्भसा ।**
**प्रत्येकं वायुना मन्त्री ताडनं नामतः स्मृतम् ।।२२९।।**

जब मन्त्र वेत्ता साधक मन्त्र से सम्बन्धित प्रत्येक वर्ण को लिख कर उन्हें चन्दनमिश्रित जल या वायु से ताडित करता है तो यह संस्कार ताडन कहा जाता है॥२२९॥

**मनुलिख्य विधानेन यदा मंत्रार्ण संख्यया ।**
**मंत्रमभिषिचेद् देवी मन्त्राणां च विशुद्धये ।।२३०।।**

हे देवि! विधिपूर्वक मन्त्र को लिख कर जब मन्त्र अक्षरों की संख्या के अनुसार मन्त्र की दोष निवृत्ति हेतु मूल मन्त्र के जपपूर्वक उनका अभिषेक करे॥२३०॥

**संचित्य मनसा मंत्री ज्योति मंत्रेण निर्दहेत् ।**
**मन्त्रे मलत्रयं देवि विमलीकरणं विदम् ।।२३१।।**

हे देवि! मन्त्रसाधक मन्त्र का मानसिक रूप से चिन्तन करता हुआ ज्योतिमन्त्र के जप से उसके तीनों प्रकार के मलों को जलाये तो यह संस्कार विमलीकरण होता है॥२३१॥

**तारं व्योमाग्निमनुयुग्दंडी ज्योतिर्मनुमतः ।**
**कुशोदकेन जप्तेन प्रत्यर्णं प्रोक्षणं मतम् ।।२३२।।**

ॐ कार, व्योम (हँ), अग्नि (रँ) मनुयुग मिल कर ज्योतिमन्त्र कहा गया है। कुशोदक से जप करते हुए प्रत्येक अक्षर का प्रोक्षण, प्रोक्षण कहा गया है॥२३२॥

**तेन मन्त्रेण विधिवद्देवस्याप्यायनं मतम् ।**
**मनुनावारिणा मन्त्रं तर्पणं तर्पणं भवेत् ।।२३३।।**

देवता के उसी मन्त्र से विधिवत् आप्यायन होता है। वारि मन्त्र वँ से मन्त्र का तर्पण करना, तर्पण संस्कार होता है॥२३३॥

**तारोमाया रमा योगं मनोर्दीपन मुच्यते ।**
**जप्यमानस्य मन्त्रस्यगोपनं त्वप्रकाशनम् ।।२३४।।**

मन्त्र से तार (ॐ) माया (ह्रीं) रमा (श्रीं) का योग होना मन्त्र का दीपन कहा जाता है। जपने योग्य, दीक्षा से प्राप्त मन्त्र का प्रकाशन (प्रकटीकरण) न करना ही गोपन है॥२३४॥

**एते च दस संस्काराः सर्व मन्त्रेषु गोपिताः ।**
**एतान्कृत्वा जपेन्मन्त्रं सदोष रहितः प्रिये ।।२३५।।**

हे प्रिये! ये ऊपर कहे गए दस संस्कार सभी मन्त्रों में गोपनीय हैं। इनको करने के पश्चात् अभीष्ट मन्त्र का जप करने से वह मन्त्र, दोषरहित हो जाता है॥२३५॥

**निर्गुणं यत् परं ब्रह्म अकारादि विवर्जितम् ।**
**साकारं यद् भवेद्देवि बहुधा तर्पणादिषु ।।२३६।।**

हे देवि! जो आकार आदि से रहित परब्रह्म है, वह तर्पण आदि इन बहुत से संस्कारों से साकार हो जाता है॥२३६॥

**यथा सूर्यस्य बिम्बस्य बहुधा दर्पणादिकम् ।**
**दृश्यते तु तथा चात्र आद्यां त्वां सर्वदेहिनाम् ।।२३७।।**

जिस प्रकार सूर्य का बिम्ब दर्पणादि में बहुत प्रकार का दिखाई देता है। उसी प्रकार यहाँ आप आद्या सभी प्राणियों में दिखाई देती हैं।

**एकमेव परं ब्रह्म ज्योतिरूपमनन्तरम् ।**
**साकारं यदि जायेत स्वेच्छयातु वरानने ।।२३८।।**
**रूपं द्वयं तथा भूत्वा देहिनां देहभेदतः ।**
**भगाकारवत ब्रह्म लिंगाकार स्वरूपतः ।।२३९।।**

एकमात्र ब्रह्म जो ज्योति रूप से सबके अन्तर में स्थित है, हे श्रेष्ठ मुखवाली! यदि वही अपनी इच्छानुसार देहधारियों में शरीर भेद के अनुसार दो रूपों में होकर साकार रूप धारण करे तो कहीं भग के आकार में होगा तो कहीं लिंग के रूप में होगा॥२३८-२३९॥

**केचित्सुभगे लिंगाकार स्वरूपिण ।**
**भगाकारस्य सेवन्ते विदुषो ज्ञानिनः सदा ।।२४०।।**

हे सुभगे! कुछ साधक लिंगाकार स्वरूप ब्रह्म की उपासना करते हैं तो विद्वान् एवं ज्ञानी जन भगाकार ब्रह्म की ही सदा सेवा करते हैं॥२४०॥

**स्त्री जाति रूपा सर्वत्र सर्वदेहेषु या मता ।**
**साशक्तिरूपा विज्ञेया पुरुषः शिवरूपवान् ।।२४१।।**

जो सभी जगह सभी देहों में स्त्री जाति के रूप में मानी गई है। वही शक्ति रूप में जानने योग्य है। पुरुष शिव स्वरूप है॥२४१॥

**तासां भगस्त्रिकोणं च कुण्डं प्रोक्तं तु चोत्तमम् ।**
**पुरुषस्य लिंगं यद्देवि शिवो ज्ञेयः सनातनः ।।२४२।।**

उन शक्तियों के भग को त्रिकोण और उत्तम कुण्ड कहा गया है। पुरुष का जो लिंग है उसे सनातन शिव रूप ही जानना चाहिये॥२४२॥

**तत्तत्तेषां विशेषाच्च नरदेहे वरानने ।**
**शक्तिः शिवश्च विज्ञेया मम संकेत मुत्तमम् ।।२४३।।**

हे वरानने! उन-उनमें विशेष रूप से मनुष्य शरीर में उनको शक्ति एवं शिव के रूप में मेरा उत्तम संकेत जानना चाहिये॥२४३॥

**भगकुंडं च सुभगे शिवो लिंग प्रकीर्त्तितम् ।**
**रजस्तु अग्निः सुभगे भगमध्येषु क्षेपनम् ।।२४४।।**

हे सुभगे! भग को कुंड और लिंग शिव कहा गया है। भग के मध्य पड़ा हुआ रज अग्नि कहा गया है॥२४४॥

**आज्यरूपं मतं शुक्रं मनोहोता प्रकीर्तिता ।**
**फलरूपं च तत्रैव नाना संसार कामना ।।२४५।।**
**एवं विज्ञाय यो मन्त्री मनोरूपा च कालवित् ।**
**नित्य होमयिता देवि तस्य पुण्यमनन्तकम् ।।२४६।।**

शुक्र को घी रूप तथा मन को होता कहा गया है। उस समय उत्पन्न होने वाली अनेक प्रकार की जो संसार संबंधी कामनाएँ हैं वेही इस होम का फलरूप हैं। इस प्रकार से जान कर जो मन्त्रसाधक मनरूपी कालज्ञ नित्य होमकर्मयुक्त होता है, हे देवि! उसका पुण्य अनन्त होता है॥२४५-२४६॥

**यं यं कामादिकं देवि मनसा चिन्त्य कारयेत् ।**
**न दोषस्तत्र विज्ञेयस्तं तं काममवाप्नुयात् ।।२४७।।**

हे देवि! साधक जिन-जिन कामादि का मन से चिन्तन कर कर्म करे तो उसमें कोई दोष नहीं होता और वह अपनी उन-उन कामनाओं को प्राप्त कर लेता है॥२४७॥

**यथोक्त देवताचारा यथोक्तं फलमश्नुते ।**
**आयुर्लक्ष्मीं यशो देवि कान्ति च मोक्षमाप्नुयात् ।।२४८।।**

वह कहे अनुसार देवता के आचार से यथोक्त फल प्राप्त करता है। वह साधक आयु, लक्ष्मी, यश, कान्ति और मोक्ष, प्राप्त करता है॥२४८॥

**अस्मिन् तन्त्रे च समया या मया परिकीर्त्तिता ।**
**सा पूर्वं विजया कल्पे चतुर्थांशसप्रकाशिता ।।२४९।।**

इस तन्त्र में जिस समया का वर्णन मेरे द्वारा किया गया है वह पहले ही मेरे द्वारा विजयाकल्प में, चतुर्थांश रूप में प्रकाशित की गई है॥२४९॥

**इमां विद्याश्च तन्त्रेस्मिन् रहस्यार्थे प्रकीर्त्तिताः ।**
**गोप्तव्याश्च प्रयत्नेन कथनीया न कश्यचित् ।।२५०।।**

**गोप्या गोप्याः पुर्नगोप्या**
**गोप्या गोप्या पुनः पुनः ।**
**पुनर्गोप्या पुनर्गोप्या जननीजारगर्भवत् ।।२५१।।**

रहस्य सम्बन्धी ये विद्यायें जो इस तन्त्र में मेरे द्वारा कही गयी हैं। उन्हें प्रयत्नपूर्वक गोपनीय रखना चाहिये। अनधिकारी किसी से भी नहीं कही जानी चाहिये। ये वैसे ही गुप्त से भी गुप्त, बारम्बार गुप्त रखे जाने योग्य हैं जैसे माता जारप्रसव से धारण किये, अपने गर्भ को बारम्बार गोपनीय रखती है।।२५१।।

**अन्तः शाक्ताश्च सुभगे बहिः शैवाश्चवैष्णवाः ।**
**एवं मे साधका लोके फलमापुर्नसंशयः ।।२५२।।**

हे सुभगे! अन्दर से शाक्त, बाहर से शैव और वैष्णव रूप में व्यवहार करते हुए जो साधक लोक में व्यवहार करता है वह सफल होता है। इसमें कोई संशय नहीं है।।२५२।।

**आचारो मम देवेशि तवाचारोऽपि च प्रिये ।**
**दिवसे गोपनं कृत्वा रात्रौ चैव समाचरेत् ।।२५३।।**

हे प्रिये! हे देवेशि! मेरा आचार और तुम्हारा आचार (पूजादि) दिन में गुप्त रखते हुए रात्रि में सम्पन्न करना चाहिये।।२५३।।

**नाना शक्ति सहालापः ये कुर्वन्ति च साधकाः ।**
**ते शीघ्रकालात्सुभगे फलं प्राप्ताश्च मानवाः ।।२५४।।**

जो साधक अनेक शक्तियों के साथ वार्तालाप करते हुए साधना करते हैं, हे सुभगे! वे मनुष्य अल्प समय में ही इच्छित फल प्राप्त कर लेते हैं।।२५४।।

**आर्द्र शुष्क विभागेन द्विधाचारः पुनः शृणु ।**
**आर्द्राचारः विज्ञेयो मकारैः पंचभिर्युतः ।**
**मकारैः पंचरहितः शुष्काचारः प्रकीर्त्तिताः ।।२५५।।**

आर्द्र तथा शुष्क भेद से दो प्रकार के आचारों के विषय में सुनो। पंचमकारों से युक्त आचार, आर्द्रआचार तथा पंचमकारों से रहित आचार शुष्कआचार कहा गया है।।२५५।।

**कलौ विशेषतो देवि आर्द्राचारः फलप्रदः ।**
**सर्वाम्नायेषु कथिता नाना तन्त्रे च देवता ।।२५६।।**

**विद्या मन्त्र विभागेन ते देवाश्चार्द्रतः कलौ ।**
**विशेषात्फलदा देवि साधका ऩाम जितात्मनोः ।।२५७।।**

हे देवेशि! हे देवि! कलियुग में आर्द्राचार ही फलदायक होता है। सभी आम्नायों के अनेक तन्त्रों में जो देवता कहे गये हैं वे देवता, विद्या और मन्त्र विभाग से कलियुग में आर्द्राचार से जितात्मा साधकों को विशेष फल देने वाले होते हैं॥२५६-२५७॥

**रहस्यं श्रृणु देवेशि परमं गोपनं सदा ।**
**सर्वाम्नायाश्च कथिता तव पार्श्वे पृथक् पृथक् ।।२५८।।**

हे देवेशि! जो मेरे द्वारा तुमसे सभी आम्नाय अलग-अलग कहे गये हैं॥२५८॥

**सर्वेभ्यश्चोत्तराम्नायः पश्चात् संकीर्त्तिता मया ।**
**गोप्यात्गोप्यतरो गुह्यो गुह्याद्गुह्यतरोमहान् ।।२५९।।**

सभी आम्नायों में उत्तराम्नाय मेरे द्वारा सबके पश्चात् कहा गया जो गोपनीय से गोपनीय एवं महान् गुह्य है॥२५९॥

**उत्तराम्नाय सुभगे सदा गोप्यः प्रकीर्त्तितः ।**
**यदि चेत्त्वत्समा लोके नारी भवति निश्चला ।।२६०।।**
**मत्समः पुरुषो देवि साधको यदि भूतले ।**
**भ्रान्ति मायादि रहितो तदा साधयितुं प्रिये ।।२६१।।**
**शक्तश्च साधको देवि अन्यथा हास्यतां व्रजेत् ।**
**आगमाचारन्तु सुभगे सर्वदा गोपनं स्मृतः ।।२६२।।**

हे सुभगे! उत्तराम्नाय तो सदा गोपनीय कहा गया है। इसकी साधना तो यदि तुम्हारे समान निश्चलमतिवाली नारी एवं इस पृथ्वी पर मेरे समान साधक हो। हे प्रिये! वह भ्रान्ति और माया आदि से रहित हो तभी संभव है उस प्रकार से साधना करने में जो समर्थ हो वही साधक कहे जाने योग्य है अन्यथा वह हास्यता को प्राप्त होता है। हे सुभगे! आगमाचार को सदा गोपन ही कहा गया है॥२६०-२६२॥

**उत्तराम्नायो देवेशि गोपनीयो विशेषतः ।**
**साधकास्तु कलौ देवि माया निन्दा संयुताः ।।२६३।।**

हे देवेशि! उत्तराम्नाय ही कलियुग में विशेष रूप से गोपनीय है। हे देवि! कलियुग में साधक भी माया और निन्दादि से संयुक्त दिखायी देते हैं॥२६३॥

**अजितेन्द्रिय लोलुपाश्च यथोक्ताचारवर्जिताः ।**
**अल्पबुद्धिरता नित्ये तस्माद्गोप्यः विशेषतः ।।२६४।।**

साधक कलियुग में अजितेन्द्रिय, लोलुप, यथोक्तआचार से रहित, दुर्बुद्धि में नित्यरत होंगे। इसीलिये इसे कलियुग में विशेष रूप से गोपनीय रखना चाहिये।।२६४।।

**सुपरिचिताय पुत्राय विनीताय प्रकाशयत् ।**
**सिद्धि हानिस्तु लभते तदा तस्य प्रकाशनात् ।**
**अतस्माद् गोपयेद्देवि यदित्वं मम वल्लभा ।।२६५।।**

इसे भलीभाँति परिचित, विनम्र, पुत्र (शिष्य) को ही प्रकाशित करना चाहिये। अन्य के प्रकाशन से सिद्धिहानि होती है। इसीलिये हे देवि! यदि तुम मेरी प्रिया हो तो तुम्हें इसे गोपन करना चाहिये।।२६५।।

**उत्तराम्नाये या माला कथिता मयि दुर्लभा ।**
**तासां नामानि सुभगे माला श्रृणु वदाम्यहम् ।।२६६।।**
**अक्षवर्णमयीमाला अलाभे हस्तपर्वजा ।**
**महाशंखमयीमाला अभावे स्फाटिका मता ।।२६७।।**

पृथ्वी पर भी जो दुर्लभ मालायें उत्तराम्नाय में कही गई हैं हे सुभगे! तुम उनके नामों को सुनो। मैं तुमसे कहता हूँ– अक्षर वर्णों की माला सर्वोत्तम होती है। इसके न मिलने पर हाथ पर्वों (पोरों) की माला, तत्पश्चात् महाशंख की बनी माला, इन सबके अभाव में स्फटिक की बनी माला कही गयी है।।।२६६-२६७।।

**स्फटिकयाश्च अभावेतु रुद्राक्ष फलनिर्मिता ।**
**रुद्राक्षमालाभावेतु कमलस्य फलसानुगा ।।२६८।।**

स्फटिक की माला के अभाव में रुद्राक्ष के फल से बनी माला, रुद्राक्षमाला के अभाव में कमल के फूल से बनी माला प्रयोग में लानी चाहिये।।२६८।।

**आसनाम्नायुत्तराम्नाये कथितानि शुभानने ।**
**सर्वाभावे व्याघ्रचर्मं ऐणवं कंबलादिकम् ।।२६९।।**

हे शुभ मुखवाली! उत्तराम्नाय में जो आसन कहे गये हैं। उनके विषय में सुनो। सबके अभाव में व्याघ्रचर्म, मृगचर्म, कम्बल आदि के आसन बताये गये हैं।।२६९।।

**यन्त्रं ताम्रे लेखयित्वा नित्यं वा संयजेत्प्रिये ।**
**दीपस्य ज्योति मध्ये तु मूलमन्त्रेण पूजयेत् ।।२७०।।**

हे प्रिये! नित्य ताँबे के पत्र पर लिख कर यन्त्र का पूजन करना चाहिये या दीप की ज्योति के मध्य में मूलमन्त्र से पूजन करना चाहिये॥२७०॥

**सर्वत्र सर्वपूजासु मूलैनैव प्रपूजयेत् ।**
**विसर्जनान्तं मूलेन मनसा ब्रह्मचिंतयेत् ।।२७१।।**

सब जगह विसर्जनपर्यन्त सब पूजाओं को मूल मन्त्र से ही सम्पन्न करना और मूल मन्त्र से ही मानसिक रूप से ब्रह्मचिन्तन करना चाहिये॥२७१॥

**सर्वद्रव्याद्यभावेतु आर्द्रकं तु प्रकीर्त्तिता ।**
**जलं वा तक्रक्षीरं वा भुक्ष्व कर्ममाचरेत् ।।२७२।।**

सभी द्रव्यों के अभाव में आदी को कहा गया है। अतः आदी, जल, मट्ठा अथवा दूध इनमें से किसी का भी भक्षण कर पूजनकर्म का आचरण करे॥२७२॥

**मकार पंचाभावेतु पंचमं कारयेत् प्रिये ।**
**अभावे पंचमं देवि मनसा पंचमं चरेत् ।।२७३।।**

हे प्रिये! पंचमकारों के अभाव में साधक केवल पंचमकर्म सम्पन्न करे। उस पंचम के अभाव होने पर हे देवि! साधक मानसिक रूप से पंचम का ही आचरण करे॥२७३॥

**एवं श्रुत्वा ततो देवि समयाचारमुत्तमम् ।**
**सा शिवा च प्रसन्नाभूत् यथातथ्यं प्रकाशनात् ।।२७४।।**
**शिवोप्यन्तः प्रसन्नोभूत् स्वयं च परमेश्वरः ।।२७५।।**

तब इस उत्तम समयाचार को सुन कर वह देवि शिवा इसके यथार्थ प्रकाशन से प्रसन्न हुईं। स्वयं परमेश्वर शिव भी इसके यथातथ्य भावार्थ प्रकाशन से प्रसन्न हुए॥२७४-२७५॥

**तदा प्रसन्नमनसा उवाच गिरिजां प्रति ।**
**सर्वाण्यागममन्त्राणि यानि यान्यपि सुन्दरि ।।२७६।।**
**मन्त्रादीन्यपि सर्वाणि विद्याम्नायादि कान्यपि ।**
**चतुर्युगेषु वर्तन्ते पारम्पर्योपदेशतः ।।२७७।।**

तब प्रसन्नमन से उन्होंने गिरिजा, पार्वती से कहा– हे सुन्दरी! सभी आगमों में जो-जो मन्त्र कहे गये हैं। या विद्या आम्नाय आदि के अन्य सब मन्त्र परम्परागत उपदेश के आधार पर चारों युगों में प्रचलित रहे हैं॥२७७॥

**सर्वेषां वेदवितां तु समयो प्रिय भूतले।**
**कृपया तव देवेशि किंचिद् किंचिद्वर्णनं शुभम् ।।२७८।।**

पृथ्वी पर उन सब में वेदवेत्ताओं को समयाचार प्रिय है। हे देवेशि! तुम्हारी ही कृपा से उसका कुछ-कुछ सुन्दर वर्णन यहाँ हुआ है॥२७८॥

**एतत्सर्वं तु नित्यं सर्वस्वमिदं मे प्रिये।**
**राज्यं देयं शिरो देयं न देयं तन्त्रमद्भुतम् ।।२७९।।**

हे प्रिये! यह सब सुनिश्चित आचार है तथा यह मेरा सर्वस्व है। अत: राज्य भी दे दिया जाय, अपना शिर भी दे दिया जाय किन्तु इस अद्भुत तन्त्र को किसी को भी नहीं देना चाहिये॥२७९॥

**सर्वाम्नायेषु कथितं तन्त्रं परमदुर्लभम्।**
**तथागोप्यं च सुभगो मातृंजार पदं यथा ।।२८०।।**

यह सभी आम्नायों में कहा गया परम दुर्लभ तन्त्र है। हे सुभगे! जैसे माता जारपद को गुप्त रखती है वैसे ही यह अत्यन्त गोपनीय है॥२८०॥

**यदि चेदेवं वरारोहे मयातुभ्यं प्रकाशितम्।**
**अतस्तु गोपयेन्नित्यं यदित्वं ममवल्लभा ।।२८१।।**

हे वरारोहे! यदि तुम मेरी प्रिया हो तो मैंने तुमसे यह जो तन्त्र प्रकाशित किया है इसे तुम्हारे द्वारा नित्य गोपनीय रखना चाहिये॥२८१॥

***इति श्रीपार्वतीमहेश्वरसंवादे समयाचारतन्त्रम् सम्पूर्णं।***
***इस प्रकार श्री पार्वती और महेश्वर संवाद के माध्यम से***
***समयाचारतंत्र सम्पूर्ण हुआ।***
***श्री गंगादेव्यै नमोनम:। श्री गुरुदिव्यमूर्तये नम:***
***संवत् १७३६ वर्षे मार्गशीर्ष सुदि ५ गुरुवार***
***पुस्तकं लिखितं श्री पा. गणेश स्वयं पठनार्थं।***

***